# ॥ दशशान्तयः ॥

ॐ भद्रं कर्णेभि श्रुणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाग्ंसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति न पूषा विश्ववेदाः । स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम्ः ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ २ ॥

ॐ नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्मा ऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासग्ं शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्मपृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरण–मुपस्तृण उप्स्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासग्ं शुश्रूषेण्यां मनुष्येभ्यस्तं मां देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ शं नो वात:पवतां मातरिश्वा शं नतपतु सूर्यः । अहानि शं भवन्तु नश्शग्ं रात्रिः प्रतिधीयताम् । शमुषानो व्युच्छतु शमादित्य उदेतु नः । शिवा नश्शन्तमाभव सुमृडीका सरस्वति ।

माते व्योम सन्दृशि । इडायैवास्त्वसि वास्तु मद्वास्तुमन्तो भूयास्म मा वास्तो–श्छित्थ्स्मह्यवास्तुस्स भूयाद्यौऽस्मान्द्वेष्टि यं च वयं द्विश्मः ।

प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्ममा प्रतिष्ठाया–श्छित्थ्स्मह्य प्रतिष्ठस्स भूयाद्यौऽस्मान्द्वेष्टि यं च वयं द्विष्मः । आवातवाहि भेषजं विवातवाहि यद्रपः । त्वग्ं हि विश्वभेषजो देवानां दूत ईयसे । द्वाविमौ वातौ वात आसिन्धोरापरावतः ॥

दक्षं मे अन्य आवाहु परान्योवातु यद्रपः । यददोवातते गृहेऽमृतस्य निधिर् हितः । ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह वात आवातु भेषजम् ।

शम्भूर्मयोभूर्नो हृदेप्रण आयूग्ंषि तारिषत् । इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुस्साश्वः । सह यन्मे अस्ति तेन । भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवसुवः प्रपद्ये वायुं प्रपद्येनार्तां देवतां प्रपद्ये ऽश्मानमाखणं प्रपद्ये प्रजापते र्ब्रह्मकोशं ब्रह्मप्रपद्य ॐ प्रपद्ये ।

अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्तिमान्तया स्वस्त्या स्वस्तिमानसानि ।

प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

द्युभि–रक्तुभिः परिपातमस्मानरिष्तेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उतद्यौः । कयानश्चित्र आभुव दूती सदावृधस्सखा ।

कयाशचिष्ठया वृता । कस्त्वा सत्यो मदानां मग्ंहिष्ठो मथ्सदन्धसः । दुढा चिदारुजे वसु । अभीषुणस्सखीनामविता जरितृणाम् ।

शतं भवास्यूतिभिः । वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धिचक्षुर्मुमुग् ध्यस्मान्निधयेव बद्धान् ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ईशानावार्याणां क्षन्तीश्चर् षणीनाम् । अपो याचामि भेषजम् । सुमित्रान् आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासूर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः ।

आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिवे मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।

पृथिवी शान्ता साग्निना शान्ता सामे शान्ता शुचग्ं शमयतु ।
अन्तरिक्षग्ं शान्तं तद्वायुना शान्तं तन्मे शान्तग्ं शुचग्ं शमयतु ।
द्यौश्शान्ता सादित्येन शान्ता सा मे शान्ता शुचग्ं शमयतु ।

पृथिवी शान्तिरन्तरिक्षग्ं शान्ति–र्द्यौ–श्शान्ति–र्दिश–श्शान्ति–
रवान्तरदिशा–श्शान्ति–रग्नि–श्शान्ति–र्वायु–श्शान्ति–रादित्य–
श्शान्ति–श्चन्द्रमा–श्शान्ति–र्नक्षत्राणि–शान्ति–राप–श्शान्ति–रोषधय–
श्शान्ति–र्वनस्पतय–श्शान्ति–र्गौ–श्शान्ति–रजा–शान्ति–रश्व–श्शान्तिः
पुरुष–श्शान्ति–र्ब्रह्म–शान्ति–र्ब्राह्मण–श्शान्ति–श्शान्ति–रेव शान्ति–
श्शान्ति–र्मे अस्तु शान्तिः ।

तयाहग्ं शान्त्या सर्वशान्तया मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि
शान्तिर्मे अस्तु शान्तिः ॥

एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि
मोत्तिष्ठन्त–मनूत्तिष्ठन्तु मा माग् श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा
श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ।

उदायुषा स्वायुषोदोषधीनाग्ं रसेनोत्पर्जन्यस्य शुष्मेणो–दस्थाममृताग्ं
अनु । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।

पश्येम शरदश्शतं जीवेम शरदश्शतं नन्दाम शरदश्शतं मोदाम
शरदश्शतं भवाम शरदश्शतग्ं शृणवाम शरदश्शतं प्रब्रवाम
शरदश्शतमजीतास्स्याम शरदश्शतं ज्योक्च सूर्यं दृशे ।

य उदगान्महतोऽर्णवाद्विभ्राजमानस्सरिरस्य मध्याथ्समा वृषभो लोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु ॥

ब्रह्मणश्चोतन्यसि ब्रह्मण आणीस्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीग्ं सदेवां यदहं वेद तदहं धारयाणि मामद्वेदोऽधि विस्रसत् ।

मेधामनीषे माविशताग्ं समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि ।

आभिर्गीर्भिर्यदतोन ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम । ब्रह्म प्रावादिष्म तन्नो मा हासीत् ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥

ॐ सं त्वा सिंचामि यजुषा प्रजामायुर्धनं च ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ५ ॥

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ६ ॥

ॐ तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ७ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ८ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ ९ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः शान्तिः शान्तिः ॥ १० ॥